१ २ ३ २ ३ १ २ ३ १ २ ३२३ १ २
(१३०२) ओं येन देवाः पवित्रेणात्मानं पुनते सदा ।
१२ ३ १ २ ३ १ २
तेन सहस्रधारेण पावमानीः पुनन्तु नः ॥

ऋष्यादयः पूर्ववत् ।

*Metrical Translation :—*

1302. Truthful men God glorify
By His worship their souls purify
Let Revelation make us pure
Giving knowledge pure and sure.

३ २ ३ १२३ ३ १ २ ३२
(१३०३) ओं पावमानीः स्वस्त्ययनीस्ताभिर्गच्छति नान्दनम् ।
१ २ ३ १ २ ३ १ २
पुण्यांश्च भक्षान् भक्षयत्यमृतत्वं च गच्छति ॥

ऋष्यादयः पूर्ववत् ।

1303. These hymns revealed by God the Purifier, bring weal. By them a man attains happiness and bliss. He gets pure and holy enjoyment in this world and attains immortality.

### आवश्यकटिप्पण्यः

(१२९८) (मातरिश्वना)–मातरि – अन्तरिक्षेऽन्तःकरणरूपे श्वयते वर्धते स मातरिश्वा । यस्यान्तः करणमतिवृद्धं विशालं तत्त्वदर्शि च जातं स मातरिश्वोच्यते तेन ।

(१२९९) (सरस्वती) वेदवाक् सरस्वतीति वाङ्नाम (निघ० १ । ११) (क्षीरम्)–दुग्धसदृशमात्मज्ञानम् । (सर्पिः) – घृतसदृशं स्नेहपूर्णं ज्योतिःस्वरूपमात्मदर्शनम् (मधु) --मधुवत् मधुरं ब्रह्मानन्दरसम् ( उदकम् )--जलवत् शीतलं शान्तिरसम ।

(१३०१) (देवीः)–देवो दानाद्वा दीपनाद्वा द्योतनाद्वा इति ७।४।१५

निरुक्तानुसारं ज्ञानदात्र्य ऋचः (देवैः) – सत्यनिष्ठैर्विद्वद्भिः सत्यसंहिता वै देवाः ॥ (ऐत० १।६) सत्यमया उ देवाः (कौषी० २।८) विद्वांसो हि देवाः (शत० ३।७।३।१०)

# अथाष्टमः खण्डः

## Section VIII

१ २ ३ १ २र३ १ २ ३ २ ३२३ १ २ ३
(१३०४) ओ३म् अगन्म महा नमसा यविष्ठं यो दीदाय समिद्धः
१ २ ३ २ ३ १ २३ १२ ३ १ ३ १ २
स्वे दुरोणे। चित्रभानुं रोदसी अन्तरुर्वी स्वाहुतं
३ १ २ ३ १ २
विश्वतः प्रत्यञ्चम् ॥

वसिष्ठो मैत्रावरुणिः ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः ।

1304. With great reverence, we approach God Who is Ever Young and Who shines well in His dwelling in the pure heart of a devotee or the vast universe. He is wondrously bright, pervading the earth and heaven, well—worshipped in all directions.

२ ३ १ २र ३ १ २ ३ २ ३ १ २ ३
(१३०५) ओं स मह्ना विश्वा दुरितानि साह्वान् अग्निष्टवे
२ ३ २ ३ १२ १ २ ३ १ २ ३ २
दम आ जातवेदाः। स नो रक्षिषद् दुरितादवद्याद्
३ १ २ ३ २ ३ १ २ ३ १ २
अस्मान् गृणत उत नो मघोनः ॥

ऋष्यादयः पूर्ववत् ।

1306. Through His great might, overcoming all evils, praised in the heart of a devotee is Omnipresent and Omniscient God. May He preserve from disgrace and trouble, both of us, who praise Him and who are wealthy in Wisdom.

१ २र ३ २ २ ३ २ ३ १ २ ३ २ ३
(१३०६) ओं त्वं वरुण उत मित्रो अग्ने त्वां वर्धन्ति मतिभि-

१ २ १ २र ३ १ २ ३ १ २ ३ २
वंसिष्ठाः । त्वे वसु सुषणनानि सन्तु यूयं पात स्व-
२ ३ १ २
स्तिभिः सदा नः ॥

ऋष्यादयः पूर्ववत् ।

1306. O God, Thou art called Mitra (The Friend of all) and Varuna (The Best or the Most Acceptable). Men of self - control and true devotees exalt Thee with the hymns. With Thee be most abundant gain of the wealth of wisdom. O ye wise men, preserve us ever more with blessings.

३२उ ३ १ २र ३१ २ ३ १ २
(१३०७) ओं महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव ।
१ २ ३ १२
स्तोमैर्वत्सस्य वावृधे ॥

वत्सःकाण्व ऋषिः । इन्द्रो देवता । गायत्री छन्दः ।

1307. God, Great in His Power and Might and like the cloud rich in rains, has been glorified by the lauds of a true devotee who is like a dear son to Him.

२ ३ २ ३ १ २र३ १२ ३ २ ३ १ ३
(१३०८) ओं कण्वा इन्द्रं यदक्रत स्तोमैर्यज्ञस्य साधनम् ।
३ १ २ ३ १ २
जामि ब्रुवत आयुधा ॥

ऋष्यादयः पूर्ववत् ।

1308. Since Wise men of meditation make with lauds God as Completer of their spiritual inner sacrifice, they declare all weapons needless for their own protection. [They being pledged to non- violence, depend on God and God alone for their protection. Such Brahmans and Sanyasis don't resort to violence as they believe in their tremendous spiritual Power.]

३ २ ३ २३ १२३ १ २२ ३ १ २
(१३०९) ओं प्रजामृतस्य पिप्रतः प्र यद् भरन्त वह्नयः ।
१ २ ३ २३ १ २
विप्रा ऋतस्य वाहसा ॥

ऋष्यादयः पूर्ववत् ।

1309. When devotees bear within themselves the splendour of God Who is 'Absolute Truth', they become true genuises and full of true wisdom, by the power of truth,

आवश्यकटिप्पण्यः

(१३०४) (स्वे दुरोणे) – दुरोणमिति गृहनाम (निघ० ३।४) भक्तहृदय-रूपे गृहे अथवा समस्तसंसार रूपेगृहे ।

(१३०५) (जातवेदाः) – जाते २ विद्यते इति वा जातानि वेदेतिवा (निरु० ७।५) Even Griffith has rightly translated the word in Foot--note. "The wise or Omniscient God." (दमे) – गृहे भक्तहृदयरूपे (दम इति गृहनाम निघ० ३।४) ।

(१३०६) (वसिष्ठाः) – अतिशयेन वासदन्त्यात्मसु परमात्मानम् इति वसिष्ठाः, यद्वै नु श्रेष्ठस्तेन वसिष्ठः (शत० ८।१।१।६) ६५० पृष्ठे टिप्पणी दृश्यताम् ॥

(१३०८) (कण्वाः)-मेधाविनः कण्व इति मेधाविनाम (निघ०३।१५) कणु-निमीलने इति धातोर्निष्पन्नः,तस्मात् कण्वाः चक्षुर्निमीलनं कृत्वा ध्यानमग्ना मेधाविन इत्यर्थः :

(१३०९) (वह्नयः) – उपासकाः वहन्ति – परमेश्वरतेजो हृदयं प्रापयन्तीति वह्नयः ।

# अथ नवमः खण्डः

## Section IX

१२ ३ १ २ ३ १ २ ३ १ २
(१३१०) ओं पवमानस्य जिघ्नतो हरेश्चन्द्रा असृक्षत ।
३२ २ ३ १ २
जीरा अजिरशोचिषः ॥

शतं वैखानसा ऋषयः । पवमानः सोमो देवता । गायत्री छन्दः ।

1310. Great lights of God Who is the Purifier, the Destroyer of ignorance and sin and Resplendent, are seen within which create great delight.

३२ ३ १ २ ३ १ २ ३ १ २
(१३११) ओं पवमानो रथीतमः शुभ्रेभिः शुभ्रशस्तमः ।
१२ ३१ २
हरिश्चन्द्रो मरुद्गणः ॥

ऋष्यादयः पूर्ववत् ।

1311. God the Purifier is the Best Owner of the chariot of the world. He is praised with fairest hymns and is the Most Resplendent. He is Destroyer of all misery and Giver of great delight. All devotees and performers of Yajnas (non—violent sacrifices) are His hosts. [They all praise Him.]

१ २ ३क २र ३ १ २ ३ १ २
(१३१२) ओं पवमान व्यश्नुहि रश्मिभिर्वाजसातमः ।
१ २ ३२ ३ १ २
दधत् स्तोत्रे सुवीर्यम् ॥

ऋष्यादयः पूर्ववत् ।

1312. O Purifier, being the Best Giver of the power by Thy rays, penetrate us giving the singer, heroic strength.

२ ३ १ २ ३१२ ३ १ २३२ ३ २
(१३१३) ओं परीतो षिञ्चता सुतं सोमो य उत्तमं हविः ।

३ १ २र ३ २क २उ ३ २ ३ २३१ २
दधन्वाँ यो नर्यो अप्स्व३न्तरा सुषाव सोममद्रिभिः॥

सप्तर्षय ऋषयः। पवमानः सोमो देवता। प्रगाथश्छन्द बृहती।

1313. O devotees! Sprinkle on all sides the divine joice (of devotion) which is the best of sacred gifts and is the friend of men establishing God in your hearts. It has been generated by devotees of firm nature, as the best among noble acts.

३१ २३१ २३ १२ ३२२ ३१२
(१३१४) ओं नूनं पुनानोऽविभिः परि स्रवाऽदब्धः सुरभिन्तरः।
१३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३
सुते चित् त्वाप्सु मदामो अन्धसा श्रीणन्तो गोभि-
१ २
रुत्तरम ॥

ऋषिदेवते पूर्ववत्। सतो बृहती छन्दः।

1314. O God! Thou Who art Invincible and the most Admirable, flow to our hearts, purifying us by Thy protective powers. We take delight in Thee, when Thou manifestest Thyself in our hearts, pleased with our prayers and meditations, offered more and more earnestly and sincerely.

१२ ३ १ २र ३ १ २
(१३१५) ओं परि स्वानश्चक्षसे देवमादनः।
२ ३ १ २ ३ २
क्रतुरिन्दुर्विचक्षणः॥

ऋष्यादयः पूर्ववत्। भुरिग द्विपदा विराट् छन्दः।

1315. God realised within for all to see (mentally) is the Source of delight to the enlightened truthful persons, Resplendent Creator of the world and Omniscient.

१ २ ३ १ २ ३२उ ३ २ ३ १२ ३ २
(१३१६) ओ३म असावि सोमो अरुषो वृषा हरी राजेव दस्मो

३ १ २र २ २उ ३१ २ ३ १२ ३ १
अभि गा अचिक्रदत् । पुनानो वारमत्येष्यव्ययं श्येनो
२र ३ १ २ ३ १ २
न योनिं घृतवन्तमासदत् ॥

वसुर्भारद्वाज ऋषिः । पवमानः सोमो देवता । जगती छन्दः ।

1316. God Who is Kind without anger, the Rainer of blessings, the Destroyer of all sins is realised by the devotees within themselves. He like a king is Destroyer of misery and He consoles His subjects asking them not to fear, roaring (so to speak). He approaches the eternal soul of a noble devotee and then by His Grace, the soul taking many births, (by joining bodies) attains the Resplendent Lord.

३१ ३ १ २३१ २ ३ १ २ १ २ ३ २
(१३१७) ओं पर्जन्यः पिता महिषस्य पर्णिनो नाभा पृथिव्या
३ २३ १२ १ २ ३ १ २ ३२उ १ २ ३
गिरिषु क्षयं दधे । स्वसार आपो अभि गा उदासरन्
१ २र ३१ २ ३ २
त्सं ग्रावभिर्वसते वीते अध्वरे ॥

ऋष्यादयः पूर्ववत् ।

1317. God Who is the Protector and Rainer of bliss is the Father of a great wise devotee. Such a wise devotee dwells in the mountains, in order to practise Yoga. His noble acts are manifested more and more according to the Vedic teachings. In non-violent sacrifices he lives with true devotees.

३ १ २ ३ १ २र३ १ २ ३ २ ३ २ ३ २
(१३१८) ओं कविर्वेधस्या पर्येषि माहिनम् अत्यो न मृष्टो
३ १ र ३ १ २ ३ १ २
अभि वाजमर्षसि । अपसेधन् दुरिता सोम नो मृड
३ १ २र३ १ २ ३ १ २
घृता वसानः परि यासि निर्णिजम् ॥

ऋष्यादयः पूर्ववत् ।

1318. O God ! Thou Who art Omniscient, pervadest great men in order to make them wise. Thou who art present everywhere and perfectly pure, art also Almighty. Driving off all distress and evils, be gracious to us O God, Creator of the world ! Being full of splendour and love, Thou engenderest purity.

### आवश्यकटिप्पणय:

(१३१०) (जीरा:) - क्षिप्रगमनशीला: प्रकाशा: जु-गतौ २।२५ औणादिको रक् (अजिरशोचिष:) अज-गतौ सर्वव्यापकतेजस्कस्य शोचिरिति इति ज्वलतोनाम (निघ० १।१७) (चन्द्रा:) - आह्-लाद कारका: चदि - आह्लादे

(१३११) (रथीतम:) - संसाररूपरथस्य स्वामी श्रेष्ठचालकश्च (मरुद्गणा:) मरुत इति ऋत्विङ् नाम (निघ० ३।१८) मरुतो गणा यस्य स: । सर्वे उपासकास्तदधीनास्तदाज्ञावशवर्तिन:

(१३१३) (हवि:) - हु - दानादनयो: अत्र दानार्थक: (अद्रिभि:) - दृ - विदारणे, अविदारणीयै: स्थिरैर्दृढस्वभावैर्वा भक्तै:

(१३१४) (अविभि:) - रक्षणशक्तिभि: अव-रक्षणादिषु
(अप्सु) - हृदयान्तरिक्षे आप इत्यन्तरिक्षनाम (निघ० १।३)
(गोभि:) - प्रार्थनावाग्भि: गौरितिवाङ्नाम (निघ० १।११)
(अन्धसा) - आध्यानेन

(१३१५) (परिसुवान:) - ध्यानोपासनःद्वारा हृदये प्रकटीकृत: साक्षात्कृतो वा

(१३१६) (अरुष:) - रोषरहित: दयालु: (दस्म:) - सर्वदु:खोपक्षेप्ता दसु - उपक्षये (गा अचिक्रदद्) - मा भैरित्यादिरूपा वाच: करोति (श्येन:) - श्यै-गतौ श्यायते देहाद् देहान्तरं गच्छतीति श्येनो जीव:

(१३१७) (पर्जन्य:) - तर्पयतीति तृप् जनाय हितो जन्य: सर्वेषां तर्पको

जनहितश्च परमात्मा तृप शब्दस्यपरभाव इति देवराजयज्वा (स्वसारः) – स्वयं सरन्ति प्रकटीभवंतीति (गिरिषु) - ईश्वरस्ता-वकेषु गृ - स्तुतौ

(१३१८) (वेधस्या) - सर्वे मेधाविनः स्युरितीच्छया 'वेधा इति मेधाविनाम' (निघ० ३।१५)
(निर्णिजम्) - पवित्रताम् णिजिर् – शौचपोषणयोः

## अथ दशमः खण्डः

१ २ ३ २ ३ १ २र १२
(१३१९) ओं श्रायन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत। वसूनि
३ १ २र३ १ २ ३ १ २ ३ १ २र
जातो जनिमान्योजसा प्रति भागं न दीधिमः ॥

ऋष्यादयः पूर्ववत्।

1319. For translation, please refer to the verse no. 267 on P. 145.

१ २ ३ १ २र ३ १ २र
(१३२०) ओ३म् अर्षिराति वसुदामुप स्तुहि भद्रा इन्द्रस्य
३१२ १ २ ३ १ २ ३ १ २र ३ १ २
रातयः। यो अस्य कामं विधतो न रोषति मनो
३ १ २ ३ १ २
दानाय चोदयन्।

ऋष्यादयः पूर्ववत्। सतो बृहती छन्दः।

1320. Prai e Him Who sends us wealth (Material as well as spiritual) prompt with His liberal boons. Good are the gifts which God gives. He is not wroth with one who does not transgress His commandments and who acts according to His will. He instigates his mind to give (in charity).

१२ ३ १ २ ३ १ २ ३ १२
(१३२१) ओं यत इन्द्र भयामहे ततो नो अभयं कृधि। मघ-

३२उ ३ १ २ ३२३ २र ३ १ २र
वन् छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि ॥

भर्गः प्रागाथ ऋषिः । इन्द्रो देवता । प्रगाथश्छन्दः ।

1321. For translation, please refer to the verse no. 274 on P. 151 and for notes to P. 154.

१ २र ३ १२ ३२उ ३ १ २
(१३२२) ओं त्वं हि राधसस्पते राधसो महः क्षयस्यासि
३२ १ २ ३१ २ ३१
विधर्ता । तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो
हवामहे ॥

ऋष्यादयः पूर्ववत् । सतो बृहती छन्दः ।

1322. For Thou O Liberal Lord of great wealth, art the Ruler of the excellent state of peace and bliss. So O God, we worshippers call on Thee O Adorable, with humble Invocation and Prayer !

आवश्यकटिप्पणी

(१३२२) (क्षयस्य) - क्षि-निवासगत्योः अत्र शान्त्यानन्दमय - स्थितौ निवासस्थेति तात्पर्यं महःइति विशेषणयोगात् ।

## अथैकादशः खण्डः

### Section XI

१ २ ३ २३ १ २र ३२
(१३२३) ओं त्वं सोमासि धारयुर्मन्द्र ओजिष्ठो अध्वरे ।
१२ ३ १ २
पवस्व मंहयद्द रयिः ॥

भरद्वाजो बार्हस्पत्यऋषिः । पवमानः सोमो देवता । गायत्री छन्दः ।

1323. O God ! Thou desirest noble speech and wisdom for us all. Thou art Giver of delight and Almighty

pervading our non—violent sacrifices. Purify us bestowing wealth of wisdom.

२ ३२ ३ १ २ ३ १ २ ३ १ २
(१३२४) ओं त्वं सुतो मदिन्तमो दधन्वान् मत्सरिन्तमः ।
१ २ २ १ २र
इन्दुः सत्राजिदस्तृतः ॥

ऋष्यादयः पूर्ववत् ।

1324. Thou when realised within art most delightful, the Upholder of the world, the Best of gladdeners. Thou art Resplendent, Ever true and conquering, never subdued.

१ २ ३ १ २र ३क २र३ १२
(१३२५) ओं त्वं सुष्वाणो अद्रिभिरभ्यर्ष कनिक्रदत् ।
३ २ ३ २ ३ १ २
द्युमन्तं शुष्ममा भर ॥

ऋष्यादयः पूर्ववत् ।

1325. Do Thou O God When manifested in the heart through our devotion, come to us roaring (so to speak) and consoling us never to fear, possessing un-shakable virtues. Grant us brightly glorious strength.

१२ ३१२ ३ २ ३ १ २ ३ १ २
(१३२६) ओं पवस्व देववीतय इन्दो धाराभिरोजसा ।
२ ३२ ३ १२
आ कलशं मधुमान्त्सोम नः सदः ॥

मनुऋषिः । पवमानः सोमो देवता । उष्णिक् छन्दः ।

1326. For tranlation, Please refer to the verse no. 571 on P. 297 and for notes to P. 300,

१२ ३ १ २३२ ३ २ ३ १ २
(१३२७) ओं तव द्रप्सा उदप्रुत इन्द्रं मदाय वावृधुः ।
२ ३ १ २ ३ १ २३ १ २
त्वां देवासो अमृताय कं पपुः ॥

ऋष्यादयः पूर्ववत् ।

1327. O God! Thy drops of bliss which are cooling like water exalt the soul to delignt. The enlightened truthful persons drink Thee up for immortality as Thou art source of everlasting joy. [By drinking up God is meant enjoying the bliss of God completely to one's full satisfaction.]

१ २ ३ १ २ ३ २
(१३२८) ओ३म् आ नः सुतास इन्दवः पुनाना धावता रयिम् ।
३१ २ ३ १२
वृष्टिद्यावो रीत्यापः स्वर्विदः ॥

ऋष्यादयः पूर्ववत् ।

1328. O ye glorious mahatmas possessing the wealth of Yoga! purifying us, enable us to attain the wealth of wisdom. You are in the habit of going about, in order to benefit others like the rain. You have destroyed all evil actions and have attained true happiness.

२ ३ १ २३१ २र ३१ २ ३ १२
(१३२९) ओं परि त्यं हर्यतं हरिं बभ्रुं पुनन्ति वारेण ।
२ ३२उ ३ २उ ३ १२ ३१ २र
यो देवान् विश्वाँ इत् परि मदेन सह गच्छति ॥

ऋष्यादयः पूर्ववत् ।

1329 For translation, please refer to the verse no, 222 on P. 282 and for notes to P. 287.

२र ३ १ २ ३ १ २ ३ १ २
(१३३०) ओं द्विर्यं पञ्च स्वयशसं सखायो अद्रिसंहतम् ।
३ १ २र३ १ २ ३ १ २ ३ १ २
प्रियमिन्द्रस्य काम्यं प्रस्नापयन्त ऊर्मयः ॥

ऋष्यादयः पूर्ववत् ।

1330. Ten companions in the form of ten Prānas (vital breaths) purify a devotee, who is bright with native splendour, who is un-shakable in his vows and whom God dearly loves.

२ ३ १ २ ३ १ २र
(१३३१) ओ३म् इन्द्राय सोम पातवे वृत्रघ्ने परि षिच्यसे ।
१२ ३ १ २ ३ १ २ ३ १२
नरे च दक्षिणावते वीराय सदनासदे ॥

ऋष्यादयः पूर्ववत् ।

1331. O juice of knowledge combined with devotion! Thou art poured to drink for the soul that is destroyer of sin, for the guerdon - giving man who is a hero and sits in his seat at non - violent sacrifices.

१२ ३२उ ३ २ ३ २ ३ २ ३ १
(१३३२) ओ पवस्व सोम महे दक्षायाश्वो न निक्तो वाजी
२र
धनाय ॥

अग्नयोधिष्ण्या ऐश्वरा देवता ऋषयः । पवमानः सोमो देवता । द्विपदा विराट् छन्दः ।

1332. (1) O Source of peace and bliss, flow to us and purify us for mighty strength, as a strong courser, bathed to win the prize.

(2) O peaceful noble soul! purify thyself for the attainment of great power, as a strong horse bathed to win the prize.

१ २ ३ २ ३ २३ १२
(१३३३) ओं प्र ते सोतारो रसं मदाय
३ २ ३ १ २ ३२ ३ १ २
पुनन्ति सोमं महे द्युम्नाय ॥

1333. Thy preceptors O worshipper of God! purify thy devotional juice which gives peace for rapturous joy, great wealth of wisdom and lofty fame.

१ २ ३ १ २र
(१३३४) ओं शिशुं जज्ञानं हरिं मृजन्ति

३ २३ १ २ ३ २ ३ १ २
पवित्र सोमं देवेभ्य इन्दुम् ॥

ऋष्यादय: पूर्ववत्

1334. The preceptors help to realise in pure heart God Who is most Admirable, Destroyer of sin and Resplendent, so that divine virtues may be manifested.

२ ३ २ ३ २३ २ ३ १ २३ १ २र
(१३३५) ओ३म् उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम् ।
१ २ ३ १ २
इन्दुं देवा अयासिषु: ॥

अमहीयुराङ्गिरस: । पवमान: सोमो देवता । गायत्री छन्द: ।

1335. The enlightened truthful persons attain the bliss of God, Who is Well - known owing to His glory, is present in all beings, is glorified by the Vedic hymns and is the Destroyer of all sins and misery.

१ २र ३ १ २ ३ २ ३ १ २
(१३३६) ओं तमिद्द् वर्धन्तु नो गिरो वत्सं संशिश्वरीरिव ।
१ २र ३ १ २
य इन्द्रस्य हृदंसनि: ॥

ऋष्यादय: पूर्ववत् ।

1336. Even as mother cows nourish their calves, so let our praise - songs glorify Him (God) who is within the heart of the soul and is giver of delight.

१ २ ३ १ २र ३ १ २ ३ २ ३ १ २
(१३३७) ओ३म् अर्षा न: सोम शं गवे धुक्षस्व पिप्युषीमिषम् ।
१ २ ३१२
वर्धा समुद्रमुक्थ्य ॥

ऋष्यादय: पूर्ववत् ।

1337. O God ! pour blessings on our knowledge. Pour forth the most desirable character that can protect us. O

Praise-worthy One ! increase the faith in us. Exalt our soul unfathomable like the ocean.

आवश्यकटिप्पण्यः

(१३२३) (धारयुः) – धारेति वाङ्नाम (निघ० १।११) शुभांवाणीं तन्मयीं विद्यांच कामयते भक्तेभ्य इति धारयुः (मंहयद्रयिः) - मंहत इति दान कर्मा (निघ० ३।२०) ज्ञानरूपं धनं ददातीति सः

(१३२४) (सत्रा जित्) सत्रेति सत्यनाम (निघ० ३।१०) जयतीति जित्

(१३२५) (अद्रिभिः) - अविदरणीयैर्दृढगुणैः (शुष्मम्)–बलम् शुष्मांमिति बलनाम (निघ० २।६)

(१३२७) (द्रप्साः) – आनन्दरसास्तद्बिन्दवो वा द्रु - गतौ प्साभक्षणे इति धातुभ्यां निष्पन्नोऽयं शब्दो रसवाचकः (कम्) - सुखस्वरूपम सुखं वै कम् (गो० उ० ६।३)

(१३२८) (सुतासः) - षु - प्रसवैश्वर्ययोः योगैश्वर्यसम्पन्ना महात्मानः (वृष्टियावः) - वृष्टिः-अभिषेचनं सर्वेषां तृप्तिकारणम् तद्युवन्ति–अभिगच्छन्तीति वृष्टियावः – सर्वांस्तर्पयितुं गमनस्वभावाः (रीत्यापः) – रीतिं कर्मक्षयम् आप्नुवन्तीति रीत्यापः - रीङ् क्षये

(१३३०) (सखायः) - आत्मनः सुहृदः प्राणापानोव्यानदान समान-देवदत्त कूर्म कृकल नाग धनंजयाख्या दश प्राणाः (प्रस्नापयन्त) प्रशोधयन्ति ष्णा - शौचे (अद्रिसंहतम्) पर्वतवत् अतिदृढं कथमपि केनापि न विचाल्यम्-दृढव्रतम।

(१३३१) (वृत्रघ्ने) - इन्द्राय पापहन्त्रे जीवात्मनें पाप्मा वै वृत्रः (शत० ११।१।५।७।। १३।४।१।१३)

(१३३३) (ते सोतारः) – तव शिक्षयितार आचार्याः भगवद्रसोत्पादन–मेवाभिषवः। (द्युम्नाय) – ज्ञानरूपधनाय यशसे वा द्युम्नं

द्योततेर्यशो वाऽन्नं वेति निरुक्ते ५।१।५ ।

(१३३४) ( शिशुम् ) प्रशंसनीयम् शिशुः शंसनीयो भवतीति निरुक्ते १०।४

(१३३५) (इन्दुः) उन्दी -- क्लेदने परमेश्वरोयो हृदयं दयार्द्रं सरसं वा विदधाति उन्देरिच्च (उणादिकोषे १।१२) (भंगम – सांसारिक दुःखानां भंजकम् (गोभिः परिष्कृतम ) --गौरिति वाङ् नाम निघ० १।११) वेदवाग्भिरलंकृतं स्तुतं वा ॥

(१३३६) (इन्द्रस्य) -- जीवस्य - प्रमाणानि पूर्वं दत्तानि तानि द्रष्टव्यानि १६१ पृष्ठे (सनिः) – हषप्रदाता षणु – दाने ।

(१३३७) (गवे) - ज्ञानार्थम गम्लृ - गतौ गतेस्त्रिष्वर्थेषु अत्र ज्ञानार्थग्रहणम ( पिप्युषीम् इषम् ) रक्षणसमर्थम इष्टं सदाचारम् ( समुद्रम् ) – सम्यक् उन्दयति क्लेदयति मन इति समुद्रं श्रद्धाम् ।

## द्वादशः खण्डः

### Section XII

२ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
(१३३८) ओ३म् आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् ।
२ ३ २ ३ २ ३ १ २
येषामिन्द्रो युवा सखा ॥

त्रिशोकःकाण्व ऋषिः इन्द्रो देवता । गायत्री छन्दः ।

1338. Those whose Friend is Ever Young Lord, light the flame (of knowledge) and thereby bring about the welfare of all people on this earth, in an orderly manner.

३२उ ३ १ २ ३ १ २ ३ २ ३ १ २र
(१३३९) ओ३न् बृहन्निदिध्म एषां भूरि शस्त्रं पृथुः स्वरुः ।
२ ३ २ ३ २ ३ १ २
येषामिन्द्रो युवा सखा ॥

ऋष्यादयः पूर्ववत ।

1339. Large is their splendour, great is their glory and impressive is their voice whose Friend is God Ever - Young.

१ २ ३ २ ३१२ ३ २३ १ २ ३ १ २
(१३४०) ओ३म् अयुद्ध इद् युधा वृतं शूर आजति सत्वभिः ।
२ ३ २ ३ २३ १ २
येषामिन्द्रो युवा सखा ॥

ऋष्यादयः पूर्ववत् ।

1340 (1) Unquelled in fight, the hero leads his army with the warrior chiefs whose Friend is God Ever Young.

(2) Even without resorting to arms, true devotees of God can conquer their opponents with their soul force, whose Friend is God Ever Young. [There is reference to non-violent Satyagraha resorted to by true Mahatmas possessing tremendous soul force.]

२र ३ २ ३ १२३ २ ३ १२ ३ १२
(१३४१) ओं य एक इद् विदयते वसु मर्ताय दाशुषे ।
१२ ३ १ २ ३ १ २ ३२
ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ॥

1341. O dear pupil, God alone, Who is Un-conquerable and Omnipotent, bestoweth spiritual wealth (of wisdom and peace) on a man who is self-abnegating and charitable.

२ ३ १ २ ३२ ३ २ ३ १ २ ३ २ १
(१३४२) ओं यश्चिद्धि त्वा बहुभ्य आ सुतावाँ आविवासति ।
३१ २र ३ २३ १ २ ३ २
उग्रं तत् पत्यते शव इन्द्रो अङ्ग ॥

ऋष्यादयः पूर्ववत् ।

1342. O Dear God ! Whoever being Thy devotee superior to many men on account of his noble virtues, worships Thee whole—heartedly, verily he gets tremendous power by Thy Grace.

३ १ २र ३ १ २ ३ १ २र
(१३४३) ओं कदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत् ।
३ १ २ ३ २३ १ २ ३२
कदा नः शुश्रवद् गिर इन्द्रो अङ्ग ॥

ऋष्यादयः पूर्ववत् ।

1343. When will God trample, like a tiny weed, the man who does not worship Him and is selfish and miserly ? When will He verily hear our songs of praise and prayer ?.

१ २ ३ १ २र ३ १ ३ १ २
(१३४४) ओं गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
३ १ २ ३ २ ३ १ २
ब्रह्माणस्त्वा शतक्रत उद् वंशमिव येमिरे ॥

मधुच्छन्दा ऋषिः । इन्द्रो देवता । अनुष्टुप् छन्दः ।

1343. For translation and notes, please refer to the verse no. 342 on P. 187 and for notes to P. 191. In Dr. Bose's rendering quoted there on P. 187 please correct the following misprints. The first line ends with "and". The second begins with 'To Thee'. In the fourth line please add 'a' before house.

२र ३ १ २र३ १२र ३ १ २
(१३४५) ओं यत् सानोः सान्वारुहो भूर्यस्पष्ट कर्त्वम् ।
२र ३ १ २ ३१२ ३ १२
तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥

ऋष्यादयः पूर्ववत् ।

1345. When thou O worshipper, climbest ridge from ridge, God looks upon the toilsome task (of this spiritual discipline). He takes notice of that wish and He the Rainer of blessings, hastens with the host of truth, good character, knowledge and other spiritual powers.

३ २उ ३ २ ३ २ ३ १ २ ३ २
(१३४६) ओं युंक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।

१ २ ३ १ २र
अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ॥

ऋष्यादयः पूर्ववत् ।

1346. O God, Yoke Thy pair of steeds in the form of Love and Kindness which enable us to reach Thee, which are bright and fulfillers of our noble desires and which protect us by casting aside our weakness. And then O Drinker of the juice of our devotion, listen to our songs of praise and prayer.

Here ends the tenth Cheptar.

## आवश्यकटिप्पण्यः

(१३३८) (बर्हिः)-प्रजा वै बर्हिः (कौ० ५ । ७॥ ८। १० ) अयं लोको बर्हिः ॥ शत० १ । ४ । १ । २४ ।

(१३३९) (इध्मः) तेजः इन्धी - दीप्तौ (शस्त्रम) - महिमा शंसु - स्तुतौ (स्वरुः) - शब्दः स्वृ - शब्दोपतापयोः ।

(१३४०) (दयते) - ददाति दय -- दानगतिरक्षणहिंसाऽऽदानेषु अत्र दानार्थग्रहणम् ।

(१३४१) (विवासति) - परिचरति पूजयति विवासतिः परिचरणकर्मा (निघ० ३ । ५ । १०) ।

(१३४२) (अराधसम्) - राध - साध संसिद्धौ परकार्याणाम् असाधकं - केवलं स्वार्थपरायणं कृपणं च परमेश्वराराधनविमुखं नास्तिकम् ।

(१३४४) (वृष्णिः) - सुखवर्षकः, सर्वशुभमनोरथपूरकः (यूथेन) -- सत्यसदाचारज्ञानादिकर्तव्यगणेन सह ।

(१३४५) (हरी) -- हरतः प्रापयतः परमेश्वरमिति हरी वात्सल्यानुग्रहौ, वात्सल्यं तज्जन्योऽनुग्रहश्च परमात्मनो जीवं परमात्मसन्निधे प्रापयतः । (केशिनौ) -- प्रकाशमयौ केशीदं ज्योतिरुच्यते ॥ ऋ० १० । १३६ । (कक्ष्यप्राः) - कक्ष्यं बाहुतलप्रदेशो भवति

कक्षेभवः कक्ष्यः लक्षणया समीपस्थः । उपासका हि सर्वे भगवत्समीपस्था एव अतएव कक्ष्या तान् प्रातः-पूरयतः नैर्बल्यापहारेण बलप्रदानेन वेति कक्ष्यप्रौ । परमेश्वरस्य वात्सल्यमनुग्रहश्च सर्वदोपासकान् पूरयत एव ॥

# अथैकादशोऽध्यायः

## CHAPTER XI

१ २ ३ १ २ ३ १ २ ३ १ २
(१३४७) ओं सुषमिद्धो न आ वह देवाँ अग्ने हविष्मते ।
१ २ ३ १ २
होतः पावक यक्षि च ।

मेधातिथिः काण्व ऋषिः । अग्निर्देवता । गायत्री छन्दः ।

1347. O Our Supreme Leader ! Well—kindled within (meditated upon) bring the enlightened truthful persons to him, who offers holy gifts. O Giver of knowledge, O Purifier, be pleased to us and unite us.

१ २ ३२ ३१२
(१३४८) ओं मधुमन्तं तनूनपाद् यज्ञं देवेषु नः कवे ।
३ १ २ ३ १ २
अद्या कृणुह्यूतये ॥

ऋषिच्छन्दसी पूर्ववत् । देवता तनूनपात् ।

1348. O Omniscient Preserver of the body, forward to—day our most pleasant and sweet sacrifice of devotion combined with knowledge, to the enlightened truthful persons for our preservation.

२३ १ २ ३१ ३२३ २ ३१ २र
(१३४९) ओं नराशंसमिह प्रियमस्मिन् यज्ञ उप ह्वये ।
१२ ३ १ २
मधुजिह्वं हविष्कृतम् ॥

ऋषिच्छन्दसी पूर्ववत् । देवता नराशंसः ।

1349. I invoke in this sacrifice, God Who is extolled by men the Beloved, the Sweet-tongued (Giver of the knowledge of the Vedas which are full of sweetness) and the most liberal Donor.

१ २ ३१२३ १२ ३१ २३ १ २र
(१३५०) ओं अग्ने सुखतमे रथे देवाँ ईडित आ वह ।
२ ३ २ ३ १ २
असि होता मनुर्हितः ॥

ऋषिच्छन्दसी पूर्ववत् । देवता इठः ।

1350. O God, Extolled by u , bring the enlightened persons in our most pleasant devotional sacrifice which gives happiness. Thou art the Giver of the fruit of actions, Omniscient and Beneficial to all.

२३२उ ३ २ ३१ २ ३ १ २ ३ २
(१३५१) ओं यदद्य सूर उदितेऽनागा मित्रो अर्यमा ।
३१ २ ३ १ २र
सुवाति सविता भगः ॥

वसिष्ठ ऋषिः । आदित्यो देवता । गायत्री छन्दः ।

1351. So when the Sun (of knowledge) has risen to-day, may God Who is Faultless. Friend of all and Dispenser of Justice, Creator of the world and Adorable, make us sinless and perfectly pure.

३ १२ ३ २उ ३ १ २र
(१३५२) ओं सुप्रावीरस्तु स क्षयः प्र नु यामन्त्सुदानवः ।
२ ३ १ २ ३ १ २
ये नो अंहोऽतिपिप्रति ॥

ऋष्यादयः पूर्ववत् ।

1352. May our home be well- guarded, when enlightenned persons of bounteous nature who take us away from all sins, come on their way and stay with us.

३२ ३ २ ३ १ २ ३१२ ३२ ३ २
(१३५३) ओ३म् उत स्वराजो अदितिरदब्धस्य व्रतस्य ये ।
३ १ २र
महो राजान ईशते ॥

प्रगाथः काण्वऋषिः । इन्द्रो देवता । गायत्री छन्दः ।

1353. Those noble persons who never transgress the inviolable laws of the Sovereign of the world, become lords of great splendour. They become fit to rule over others or guide them through their supremacy.

१ २ ३ १ २ ३ १ २र
(१३५४) ओं उ त्वा मदन्तु सोमाः कृणुष्व राधो अद्रिवः ।
१२ ३ १ २
अव ब्रह्मद्विषो जहि ॥

पराशरऋषिः । पवमानः सोमो देवता । त्रिष्टुप् छन्दः ।

1354. May the devotees of peaceful nature, please Thee O Lord, possessing the power of creating and destroying all things. Grant unto us all wealth (Spiritual and material). Drive off the enemies of knowledge.

३ २ ३ १ २३ २ ३ ३ २ ३ १ २
(१३५५) ओं पदा पणीनराधसो नि बाधस्व महाँ असि ।
२उ ३ २ ३ २ २र
न हि त्वा कश्चन प्रति ॥

ऋष्यादयः पूर्ववत् ।

1355. Crush with Thy foot (so to speak) the niggard churls or wicked people who do not give in charity and are not Thy worshippers. Mighty and Great art Thou. There is no one to equal Thee. [God destroys wicked selfish people with His Might, as Dispenser of justice.]

१ २ ३ २ ३ २ ३ १ २र
(१३५६) ओं त्वमीशिषे सुतानामिन्द्र त्वमसुतानाम् ।

२उ ३ १ २
त्वं राजा जनानाम् ॥

ऋष्यादयः पूर्ववत् ।

1356. O God ! Thou art the Lord of those who are devoted to Thee and possess the wealth of wisdom and truth; Thou art the Lord of the souls and the Matter which are never born. Thou art the Sovereign of all people and other beings.

आवश्यकटिप्पण्यः

## SOME IMPORTANT NOTES AND COMMENTS

(१३४८) (तनूनपात्)–तनूं न पातयतीति तनूनपान्नित्यो निर्विकारश्च Rev· Stevenson's translation as "Preserver of the body' is better than Griffith's who in his foot-note gives such absurd explanations as "Tanunapat. Son of thyself; a frequently occurring name of Agni, so called because fire is sometimes self generated, as in the lightning or produced by attrition, and not necessarily derived from other fire. Other fanciful explanations of the word are given.

(१३४९) (नराशंसम्)–नरैः आशंस्यते स्तूयत इति नराशंसः परमेश्वरः (मधुजिह्वम्)– मधु ज्ञानम् मन-अवगमे ज्ञानमयी जिह्वा यस्य सः अथवा माधुर्य युक्त वेद ज्ञान दायकम् ।

(१३५०) (सुखतमे रथे)–अतिशयेन सुखदायिनि रथे-- रमणीये भक्ति-यज्ञ (मनुः) -- सर्वज्ञः

(१३५१) (सूरे) ज्ञान रूपे सूर्ये (भगः) भजनीयः सेवनीयः भज–सेवा - याम् ।

(१३५२) (क्षयः)--निवासस्थानम् क्षि-निवासगत्योः अत्र निवासार्थग्रहणम (सुदानवः) --उत्तम दातारः-उदाराः ।

(१३५३) (अदितिः) [illegible] दो अवखण्डने अख-

एडकाः अनुल्लङ्घका इत्यर्थः। ( स्वराजः ) – स्वयं राजमानस्य परमेश्वरस्य ।

(१३५४) (अद्रिवः) अत्तेरद्रिःसंहारशक्तिसम्पन्नः "अत्ता चराचरग्रहणात्" ( ब्रह्मसूत्रे १ । ६ ) इत्यादिवत् ।

(१३५५) ( पणीन् ) – पण व्यवहारे इति धातो पणिशब्दो निष्पद्यते अराधस इति विशेषणबलादत्र दुष्टव्यवहारवतां पणिशब्देन ग्रहणम् ।

(१३५६) (सुतानाम्) – सु – प्रसवैश्वर्ययोः त्वद्भक्तिज्ञानरूपैश्वर्यशालिनां भक्तानाम् ( असुतानाम ) – अनुत्पन्नानां प्रकृतिजीवानाम्

# अथ द्वितीयः खण्डः

## Section II.

१ २र३ १ २ ३ २ २ ३ १ २र ३ १
(१३५७) ओ३म् आ जागृविर्विप्र ऋतं मतीनां सोमः पुनानो
२ ३१ २ १ २ २ १ २ ३ २ ३ १ २ ३१
असदच्चमूषु । सपन्ति यं मिथुनासो निकामा अध्व-
२ ३ १ २ ३ १ २
र्यवो रथिरासः सुहस्ताः ॥

1357. God is seated in the hearts of His true devotees who enjoy the juice of devotion. He is ever watchful (Omniscient), making up the deficiencies of those who are devoted to Him and purifying the truth of wise men. He is the true object of our hymns. Him the performers of non-violent sacrifices who are masters of the chariot of their bodies and skillful-handed paired (accompanied by their wives,) and eager, follow and attain.

१ २३२उ ३ २३ १ २ ३ १ २र३ १ २ ३ १
(१३५८) ओं स पुनान उप सूरे दधान ओभे अप्रा रोदसी वी

२र ३ २ ३ १ २ ३ १ २ ३ २ ३ १
ष आव: । प्रिया चिद् यस्य प्रियसास ऊती सतो
२र ३२ ३ १ २र
धनं कारिणे न प्र यंसत् ॥

ऋष्यादय: पूर्ववत् ।

1358. The devotee of God purifies all, meditating upon the Divine Sun, he fills heaven and earth with his light and he can go freely everywhere. He discloses the secret of both worlds. May he whose dear and beneficial desires are for the protection of the world, grant us who are like his servants, the wealth of wisdom.

१ २ ३ १ २र ३ १ २३ १ २ ३ २ ३ २
(१३५९) ओं स वर्धिता वर्धन: पूयमान: सोमो मीढ्वाँ अभि
३ १ २ १ ३ ३ १२ ३१२ ३ २
नो ज्योतिषावित्। यत्र न: पूर्वे पितर: पदज्ञा:
३ १ २ ३ १ २र ३ २
स्वर्विदो अभि गा अद्रिमिष्णन् ॥

ऋष्यादय: पूर्ववत् ।

1359. May he an emancipated being on earth, having been perfectly purified by his preceptors, the strengthener and increaser of knowledge, bountiful embodiment of peace, help us with his light of wisdom, wherein our sires of old who knew the meanings of the Vedic words thoroughly and therefore knew the path of true happiness, attained the Invincible Immortal God. [Such verses teach respect for experienced persons by the young ]

१ २ ३ १ २र ३ १ २ ३ १ २
(१३६०) ओं मा चिदन्यद् वि शंसत सखायो मा रिषण्यत ।
२ ३ १ २ ३ १२३ १ २ ३१ २र ३ १ २
इन्द्रमित् स्तोता वृषणं सचा सुते मुहुरुक्था च
शंसत ॥

प्रगाथ: घौर: काण्व ऋषि: । इन्द्रो देवता । विषमा बृहती छन्द: ।

1360. Glorify naught besides O friends except God, so shall no sin trouble you. Praise only Mighty God Who is the Rainer of peace and happiness, in solitude and in gatherings when the Juice of devotion is shed and say your lauds repeatedly.

३ १ २ ३ १ २ ३ २ ३ १ ३र ३
(१३६१) ओ३म् अवक्रक्षिणं वृषभं यथा जुवं गां न चर्षणी-
१ २ ३ १ २ ३ १ २ २ १ ३र ३
सहम् । विद्वेषणं सवननमुभयङ्करं मंहिष्ठमुभया-
१२
विनम् ॥

ऋष्यादयः पूर्ववत् । समा सतो बृहती ।

1361. Glorify Him O friends, Who controls all worlds. Who is Powerful and Swift like a Bull, Conqueror of men and Bounteous like a cow; Who is free from enmity towards any one, is the object of our devotion, Cause of both creation and dissolution of the universe, Most Munificent and Protector of the life of good as well as wicked people.

२३ १ २र ३ २ ३ १ २
(१३६२) ओ३म् उदु त्ये मधुमत्तमा गिरः स्तोमास ईरते ।
३ १ २ ३ १ २र ३२ ३ १ २
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव ॥

मेध्यातिथिः काण्व ऋषिः । इन्द्रो देवता । प्रगाथश्छन्दः ।

1362. These Vedic songs which are exceedingly sweet, these hymns of praise ascend to Thee O God, like ever-conquering chariots which display their strength, gain wealth and give un-failing help.

१ २ ३ १ २३ १ २ ३ २ ३ २ ३ १ २
(१३६३) ओं कण्वा इव भृगवः सूर्या इव विश्वमिद् धीतमा-

२ ३ १ २ ३ १ २ ३१२ ३ १ २
शत । इन्द्रं स्तोमेभिर्महयन्त आयव: प्रियमेधासो

अस्वरन् ॥

ऋषिदेवते पूर्ववत् । सतो बृहती छन्दः ।

1363. Those persons who like wise men have destroyed all their sins and ignorance and have become like the suns, attain God Who is All—pervading and worthy of meditation. The men who love pure intellect, sing the glory of God with their lauds and chant the Vedic hymns.

२३ १ २र३ १ २ ३ १२ ३ १२ ३ १ २
(१३६४) ओं पर्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः।

३ २ ३१ २ ३ १ २
द्विषस्तरध्या ऋणया न ईरसे ॥

ऋष्यादय: पूर्ववत् ।

1364. For translation, please refer to the Verse no. 428 on P. 228. Repeated here in the context for emphasis.

१ २ ३ १ २ ३ १२ ३ २ ३ १ २ ३
(१३६५) ओ३म् अजीजनो हि पवमान सूर्यं विधारे शक्मना

१२ १ २ ३ १ २ ३ १२
पय: । गोजीरया रंहमाणः पुरन्ध्या ॥

1365. O Purifier, Thou hast created the sun with rain in un—supported sky by Thy vivifying Power which upholds the whole world. Thou art Almighty.

२ ३ १ २ ३१ २ ३ १ २ ३१ १ ३
(१३६६) ओ३म अनु हि त्वा सुतं सोम मदामसि महे समर्य-

१ २ १२ ३ १ २ ३ १ २
राज्ये । वाजाँ अभि पवमान प्र गाहसे ॥

ऋष्यादय: पूर्ववत् ।

1366. May we rejoice living under the protection of good kings, realising Thy presence in our hearts. O Puri-

fier, Thou enterest into mighty deeds. (It is by the Grace and help of the Omnipotent God, that a man is able to do mighty works.

२ ३ १ २ १ २
(१३६७) ओं परि प्र धन्व इन्द्राय सोम ।
३ २ ३१२ ३ १ २र
स्वादुर्मित्राय पूष्णे भगाय ॥

ऋष्यादयः पूर्ववत् ।

1367. For translation, please refer to the verse no. 427 on P. 228.

३ १ २र ३ १ २र३
(१३६८) ओ३म् एवामृताय महे क्षयाय ।
२ ३ १ २ ३ २ ३ १ २
स शुक्रो अर्ष दिव्यः पीयूषः ॥

ऋष्यादयः पूर्ववत् ।

1368. O God ! Thou Who art Perfectly Pure and like the Divine Nectar of Bliss, enable us to attain Immortality and Emancipation which is a Great Shelter.

१ २ ३ १ २ ३
(१३६९) ओ३म् इन्द्रस्ते सोम सुतस्य पेयात् ।
२ ३ १ २ १ २ ३ २
क्रत्वे दक्षाय विश्वे च देवाः ॥

ऋष्यादयः पूर्ववत् ।

1369. Let the soul O God ! drink deep of Thy juice (of devotion) for wisdom and all enlightened truthful persons for strength.

आवश्यकटिप्पण्यः

## SOME IMPORTANT NOTES AND COMMENTS

(१३५७) (चमूषु) – भगवद् भक्तयास्वादपरायणेषु जीवेषु–तेषां हृदयेषु

(रथिरासः) – शरीररूपरथस्वामिनः "शरीरं रथमेव तु" ॥ (कठ० १३ । ३)

(१३५८) (सूरे) – आत्मिक सूर्ये सूर्यादीनामपि प्रकाशके "इन्द्रः सूर्यमरोचयत्" इतिहिश्रुतिः ऋ. ८ । ३।६ । "तमेव भान्तमनुभातिसर्वं, तस्य भासा सर्वमिदं विभाति" इतिमुण्डकोपनिषदे २ । २ । १० । (आवः) – गच्छति सर्वत्र योगसिद्ध या, अवधातोरनेकार्थेषु गत्यर्थ ग्रहणमत्र अथवा अवगमार्थ ग्रहणम् ।

(१३५६) (पदज्ञाः) – वैदिकपदानामर्थज्ञातारः (स्वर्विदः) – स्वः – सुखं तत्प्राप्तिसाधनं विदन्ति जानन्तीति (अद्रिम्) दृ–विदारणे अविदरणीयम् अमरं सदैकरसं परमेश्वरम् ।

(1360) This Vedic Mantra, even in Griffith's faulty translation which we have deliberately adopted putting God in the place of Indra (which perhaps he considers to be the name of a particular god, but which really means God, and changing the translation of सुतासचे from 'the Juice is shed' into 'the Juice of devotion is shed' shows the monotheistic teaching of the Veda, God alone is to be worshipped and and none else besides Him.

(१३६१) (उभयंकरम्) – सृष्टेः प्रलयस्य च कर्तारम् ।

(१३६३) (कण्वाः) – मेधाविनः कण्व इति मेधाविनाम (निघ० ३१५) (भृगवः) – भ्रस्ज - पाके प्रणष्टपापकर्माणः परिपक्वज्ञानाश्च (प्रिय मेधासः) - प्रिया मेधा येषां ते ।

It is quite wrong on the part of Griffith and others to take the words कण्वाः भृगवः and प्रियमेधासः as the names of particular persons. They forget the Meemansa Rule परन्तु श्रुति सामान्य मात्रम् i. e. in the Vedas, the words stand not for any particular persons as proper

nouns, but as common nouns denoting certain qualities.

(१३६६) (समर्यराज्ये) अर्य ईश्वरनाम (निघ० २ । २२) सम्-सम्यक् श्रेष्ठस्वामिराज्ये – सुराज्ये इत्यर्थः ।

(१३६८) (शुक्रः) – शुचिर्-पूतीभावे परमपवित्र. (क्षयाय)–क्षि-निवासगत्योः महते निवासाय मोक्षदशायाम् ।

(१३७०) (तन्तुं ततम्) - तनु – विस्तारे सर्वत्र विस्तृतं ब्रह्मरूपं सूत्रम् तथा चाथर्वणोश्रुतिः "यो विद्यात् सूत्रं विततं, यस्मिन्नोताः प्रजा इमाः । सूत्रं सूत्रस्य यो विद्यात् स विद्याद् ब्राह्मणं महत् ॥ (अथर्व १० । ८ ३७)

# तृतीयः खण्डः

## Section III

१२ ३ १२ ३ १ २ ३ १ २ ३१२
(१३७०) ओं सूर्यस्येव रश्मयो द्रावयित्नवो मत्सरासः प्रसुतः
३ १ २ १ २ ३२उ ३ १ २ ३ २ ३ १ २
साकमीरते । तन्तुं ततं परि सर्गास आशवो नेन्द्राद्
३ १ २ ३ १ २ २ ३ १
ऋते पवते धाम किं चन ॥

1370. These worlds which are moving like the beams of the sun, urging men to speed and gladdening them, as created by God, point out to Him as All-pervading Thread. No place is pure without the meditation on God, as He is Perfectly Pure. Power and Glory emanate from no other source but God.

१ २ ३ २ ३ १२ ३ २ ३ १२ ३ १ २
(१३७१) ओ३म् उपो मतिः पृच्यते सिच्यते मधु मन्द्राजनी
३ २ ३१ २ १ २ ३१ २ ३ १ २३
चोदते अन्तरासनि । पवमानः सन्तनिः सुन्वतामिव

१२ ३२उ ३ १ २
मधुमान् द्रप्सः परि वारमर्षति ॥

1371. When intellect is deeply fixed in God, the juice of divine joy is shed within. The tongue with joyous sound is stirring in the mouth. God the Purifier Who pervades all and is the Source of Sweet joy is realised in the noble heart of a true devotee.

३ १ २ ३ १ २ ३१२ ३१ २ ३१ २र
(१३७२) ओ३म् उक्षा मिमेति प्रति यन्ति धेनवो देवस्य देवीरुप

३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३
यन्ति निष्कृतम् । अत्यक्रमीदर्जुनं वारमव्ययम्

२ ३ २ ३ २उ ३ १ २
अत्कं न निक्तं परि सोमो अव्यत ॥

ऋष्यादयः पूर्ववत् ।

1322. The soul gives utterance to devotional sounds. The cows in the form of the senses follow her. Her divine powers approach God's own nature. [The soul becomes like God in purity and truth etc.] The soul goes beyond the vital sheath called Prāna maya and then being free from bondge, attains God Who is like a pure Armour, Bright like the thunder bolt and Indestructible.

३ १र ३ १ २ ३ २ ३ १ २
(१३७३) ओ३म् अग्निं नरो दीधितिभिररण्योर्हस्तच्युतं जन-

३ २ ३ १ २ ३ २ ३ ३ २
यत प्रशस्तम् । दूरेदृशं गृहपतिमथव्युम् ॥

ऋष्यादयः पूर्ववत् ।

1373. For translation please refer to the verse no. 72 on P. 65 and for notes to P. 66 Repeated in the context for emphasis.

२ ३ २३ ३ २र ३ २ ३ १२३
(१३७४) ओं तमग्निमस्ते वसवो न्यृण्वन् त्सुप्रतिचक्षमवसे

१ २ ३ २ २उ ३ २ ३ १ २
कुतश्चित् । दक्षाय्यो यो दम आस नित्यः ॥

1374. Brahma Charis (Who observe the vow of continence for at least 25 years and practise Pranayama) seek God within their house (in the form of heart) for their protection from all sides. God is Resplendent, giving light to all to see things of the world. It is He Who being Eternal gives strength and Who pervading the whole universe which is like His house, must be adored for ever.

१ २ ३ १ २र ३क२र
(१३७५) ओं प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ ।
१ २र ३ १ २ ३ १ २
त्वां शश्वन्त उप यन्ति वाजाः ॥

ऋष्यादयः पूर्ववत् ।

1375. O Ever Youthful God, Shine Thou before us, well - kindled with the flame of knowledge that never fadeth. Eternal knowledge and Powers dwell in Thee and wise men in large numbers always approach Thee.

१ २र ३ १ २ ३१२ ३ २
(१३७६) ओ३म् आयं गौः पृश्निरक्रमीदसदन् मातरं पुरः ।
३१२ ३ १ २
पितरं च प्रयन् त्स्वः ॥

ऋष्यादयः पूर्ववत् ।

1376. For translation, please refer to the verse no. 630 on P. 326 and for notes to P. 330.

३ १ २ ३२३ ३ १ २ ३ २
(१३७७) ओ३म् अन्तश्चरति रोचनास्य प्राणादपानती ।
२र ३ १ २र
व्यख्यन्महिषो दिवम् ॥

1377. For translation, please refer to the verse no. 631 on P. 327 and for notes to P. 360.

३२उ ३ १ २ ३ १ २३ १ २
(१३७८) ओं त्रिंशद् धाम वि राजति वाक् पतङ्गाय धीयते ।
२ ३ २ ३२३ १
प्रति वस्तोरहद्युभिः ॥

ऋष्यादयः पूर्ववत् ।

1378. For translation, please refer to the verse no. 632 on P. 327 and for notes to P. 330.

आवश्यकटिप्पणयः

(१३७१) मधुमान् माधुर्ययुक्तो रसस्वरूपः परमात्मा तथा चोपनिषत् "रसो वै सः" (तैत्ति० २ । ७)

(१३७२) (धेनवः) - इन्द्रियरूपाः गावः । (अर्जुनम्)—अर्जुनमिति रूपनाम (निघ० ३ । ७) भास्वरम् (अत्कम्)—वज्रम् अत्कमिति वज्रनाम (निघ० २ । २०) (अव्यम्) – अविनाशि ब्रह्म ।

(१३७४) (अस्ते)—गृहे हृदयरूपे अस्तमिति गृहनाम (निघ० ३ । ४) तथा च भगवद्गीतायाम् "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" (१८ । ६१) (दक्षाय्यः) -- बलप्रापकः दक्ष इति बलनाम (निघ० २ । ६) अय-गतौ गतेस्त्रिष्वर्थेषु प्राप्त्यर्थग्रहणमत्र ।

(१३७५) (शश्वन्तो वाजाः) - वाज शब्दो वज-गतौ इति धातोर्निष्पद्यते गति शब्दस्य ज्ञानगमनप्राप्तिरूपेष्वर्थेषु अत्र ज्ञानार्थग्रहणम भगवान् नित्यज्ञानाश्रयः तथा वाज इति बलनाम (निघ० २.६) इत्थं परमेश्वरे नित्यज्ञानस्य नित्यायाः शक्तेश्चनिवासइत्येकं तात्पर्यम् (२) वाजाः :- ज्ञानरूपधनस्वामिनः शश्वत् इति बहुनाम (निघ० ३.१) तस्मात् शश्वन्तः - बहुसंख्यकाः

# अथ द्वादशोऽध्यायः

## CHAPTER XII

३ १ २ ३१ २र ३१२
(१३७९) ओ३म् उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये ।
३ २ ३ १ २ ३ २
आरे अस्मे च शृण्वते ॥

गोतमऋषिः । अग्निर्देवता । गायत्री छन्दः ।

1379. Chant a hymn to our Supreme Leader, while doing non—violent noble deeds and sacrifices. He hears us everywhere, far and near.

१ २र ३ १ २ ३ १२ ३ १ २
(१३८०) ओं यः स्नीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु ।
१ २ ३२३ १२
अरक्षद् दाशुषे गयम् ॥

ऋष्याद्यः पूर्ववत् ।

1380. He Who is the First and the Best, ever to be worshipped, present among the people who go forwardly, harmoniously loving one another. He preserves His wealth for those who give themselves up to Him and are charitable.

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
(१३८१) ओं स नो वेदो अमात्यमग्नी रक्षतु शन्तमः ।
३२उ ३ १ २
उतास्मान् पात्वंहसः ॥

वसिष्ठ ऋषिः । छन्दो देवते

1381. May that Most Blissful God guard our wealth (material and spiritual in the form of wisdom which dwells within us). And may He keep us away from all sins, pain and grief.

३१ २ ३ २३ २ ३ १ २ ३ १ २
(१३८२) ओ३म् उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि ।

३ १ २र
धनञ्जयो रणेरणे ॥१॥

ऋष्यादय: प्रथमद्वितीयमन्त्रवत् ।

1382. Yea, let men say, God is manifested within us Who slays all our sins and drives away all obstacles, Who winneth wealth in all beautiful places and in every fight.

१ २ ३ १ २र ३ १ २
(१३८३) ओ३म् अग्ने युंक्ष्वा हि ये तवाश्वासो देव साधव: ।
२३ १२ ३१२
अरं वहन्त्याशव: ॥

भरद्वाज ऋषि: । अग्निर्देवता । गायत्री छन्द: ।

1383. O Omniscient Lord, prompt Thy wise devotees of righteous nature to practise Yoga. Being active, they fulfil the mission of their lives well.

१ २ ३ १ २३ १ २र ३१२
(१३८४) ओ३म् अच्छा नो याह्या वहाभि प्रयांसि वीतये ।
२ ३ १
आ देवान्त्सोमपीतये ॥

ऋष्यादय: पूर्ववत् ।

1384. O God! come hither (be manifest in our hearts) so that we may attain true knowledge and all desirable objects. Bring the enlightened truthful persons to drink the drought of Soma joice (Devotion commingled with knowledge).

१ २ ३ १ २र ३ १ २
(१३८५) ओ३म् उदग्ने भारत द्युमदजस्रेण दविद्युतत् ।
२ ३ १ २
शोचा वि भाह्यजर ॥

ऋष्यादय: पूर्ववत् ।

1385. O God Sustainer of the world and O Deathless, Thou Who art flaming splendid with un-fading might, make

us shine forth and gleam.

१ २ ३ १ २र३ २ ३ १ २ ३ १ २र

(१३८६) ओं प्र सुन्वानायान्धसो मर्तो न वष्ट तद् वचः ।

२ ३ १ २ ३ १ २ ३ २ ३ १ २र

अप श्वानमराधसं हता मखं न भृगवः ॥

विश्वामित्रऋषिः । पवमानः । सोमो देवता । अनुष्टुप् छन्दः ।

1338. Ordinary mortal can not acquire proficiency in that divine speech which is attained by true devotees, performing non - violent sacrifices (external as well as internal). O dispellers of the darkness of ignorance, never violate the sacrifice. Drive ye away the niggard hound—like person who is greedy, selfish and un - clean, not devoted to God.

२ ३ १ २र ३२उ ३२ ३क २र

(१३८७) ओ३म् आ जामिरत्के अव्यत भुजे न पुत्र ओण्योः ।

१ २ ३१ २र ३ १ २र ३ १ २

सरज्जारो न योषणां वरो न योनिमासदम् ॥

ऋष्यादयः पूर्ववत् ।

1387. As a son is clasped in the arms of his parents, as a lover approaches his beloved or bridegroom the bride, the soul full of devotion and purity approaches God with love after meditating upon Him in the heart.

२ ३ १ २ ३ १ २ ३ २उ ३ २ ३ १ २

(१३८८) ओं स वीरा दक्षसाधनो वि यस्तस्तम्भ रोदसी ।

३१२ ३ १ २र ३ १ २

हरिः पवित्रे अव्यत वेधा न योनिमासदम् ॥

1388. That hero who produces strength, he who hath controlled the Prāna and the apāna (like the heaven and the earth), and who is the destroyer of sins, attains Pure God—the Home of peace; he attains Him like a wise man.

३ २ ३ १ २र ३१२ ३१

(१३८९) ओ३म् अभ्रातृव्यो अना त्वम् अनापिरिन्द्र जनुषा सना-

२ ३ १ २ ३ १ २
दसि । युधेदापित्वमिच्छसे ॥

सोभरिः काण्वः ऋषिः । इन्द्रो देवता । प्रगाथःविषमा ककुप् छन्दः ।

1389. O God, Thou art rival-less and leaderless, from all eternity. Thou seekest friendship through the struggle or war with evil propensities. [It is not possible to attain God Who is perfectly Pure, unless and until one becomes pure by struggling with all evil tendencies within himself.]

१ २ ३१ २ ३ १ २ ३ १ २ ३क २र
(१३९०) ओं न की रेवन्तं सख्याय विन्दसे पीयन्ति ते सुराश्वः ।
३ २ ३ १ २ ३ १ २र३ २उ ३ १ २
यदी कृणोषि नदनुं समूहस्यादित् पितेव हूयसे ॥

ऋष्यादयः पूर्ववत् । सतो बृहती छन्दः ।

1390. O God, Thou findest not an un - righteous wealthy man to be Thy friend; those scorn Thee who are flown with wine. When thou makest Thy friend ( devotee ) a preacher of Truth and leadest him on the path of progress, then Thou art invoked like a father.

१ २ ३ २३ २ ३२ ३ १ २र ३ १२
(१३९१) ओ३म् आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये !
३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
ब्रह्मयुजो हरय इन्द्र केशिना वहन्तु सोम पीतये ॥

मेधातिथिमेध्यातिथी काण्वावृषी । इन्द्रो देवता । बृहती छन्दः ।

1391. For translation, please refer to the verse no. 245 on P. 136 and for notes to P. 132.

२ १२ ३ २ ३ १ २ ३१२
(१३९२) ओ३म् आ त्वा रथे हिरण्यये हरी मयूरशेप्या !
३ १ २ ३ २ ३ १ २ ३ १ २ ३१२
शितिपृष्ठा वहतां मध्वो अन्धसो विवक्षणस्य पीतये॥

ऋष्यादयः पूर्ववत् ।

